## प्रथमोऽध्यायः

वैशंपायन उवाच
ततो राजा धृतराष्ट्रो मनीषी
संपूज्य वाक्यं विदुरेरितं तत्।
सनत्सुजातं रहिते महात्मा
पप्रच्छ बुद्धिं परमां बुभूषन्॥ ॥1॥

धृतराष्ट्र उवाच
सनत्सुजात यदिदं शृणोमि
मृत्युर्हि नास्तीति तवोपदेशं।
देवासुरा आचरन्ब्रह्मचर्य
ममृत्यवे तत्कतरन्नु सत्यं॥ ॥2॥

सनत्सुजात उवाच
अमृत्युः कर्मणा केचिन्मृत्युर्नास्तीति चापरे।
शृणु मे ब्रुवतो राजन्यथैतन्मा विशंकिथाः॥ ॥3॥

उभे सत्ये क्षत्रियाद्यप्रवृत्ते
मोहो मृत्युस्सम्मतो यः कवीनां।
प्रमादं वै मृत्युमहं ब्रवीमि
सदाप्रमादममृतत्वं ब्रवीमि॥ ॥4॥

प्रमादाद्वा असुराः पराभव
न्नप्रमादाद्ब्रह्मभूताः सुराश्च।
न वै मृत्युर्व्याघ्र इवात्ति जंतू
न्नाप्यस्य रूपमुपलभ्यते हि॥ ॥5॥

यमं त्वेके मृत्युमतोऽन्यमाहु
रात्मावासममृतं ब्रह्मचर्यम्।
पितृलोके राज्यमनुशास्ति देव
श्शिवः शिवानामशिवोऽशिवानाम्॥ ॥6॥

आस्यादेष निःसरते नराणां क्रोधः
प्रमादो मोहरूपश्च मृत्युः।
अहंगतेनैव चरन्विमार्गान्न
चात्मनो योगमुपैति किञ्चित्॥ ॥7॥

ते मोहितास्तद्वशे वर्तमाना
इतः प्रेतास्तत्र पुनः पतन्ति।
ततस्तं देवा अनु परिप्लवन्ते
अतो मृत्युं मरणादभ्युपैति॥ ॥8॥

कर्मोदये कर्मफलानुरागा
स्तत्रानुयांति न तरन्ति मृत्युम्।
सदर्थयोगानवगमात्सम
न्तात्प्रवर्तते भोगयोगेन देही॥ ॥9॥

तद्वै महामोहनमिन्द्रियाणां
मित्थ्यार्थयोगेऽस्य गतिर्हि नित्या।
मिथ्यार्थयोगाभिहतान्तरात्मा
स्मरन्नुपास्ते विषयान्समन्तात्॥ ॥10॥

अभिध्या वै प्रथमं हन्ति चैनं
कामक्रोथै गृह्य चैनं तु पश्चात्।
एते बालान्मृत्यवे प्रापयन्ति
धीरास्तु धैर्येण तरन्ति मृत्युम्॥ ॥11॥

योऽभिध्यायन्नुत्पतिष्णून्निहन्या
दनाचारेणाप्रतिबुध्यमानः।
स वै मृत्युं मृत्युरिवात्ति भूत्वा
ह्येवं विद्वान्योऽभिहंतीह कामान्॥ ॥12॥

कामानुसारी पुरुषः कामाननु विनश्यति।
कामान्व्युदस्य धुनुते यत्किञ्चित्पुरुषो रजः॥ ॥13॥

देहोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते।
गृध्यन्त इव धावन्ति गच्छन्तः श्वभ्रमुन्मुखाः॥ ॥14॥

अमन्यमानः क्षत्रिय कश्चिदन्यं
नाधीयते तार्ण इवास्य व्याघ्रः।
क्रोधाल्लोभान्मोहभयान्तरात्मा
स वै मृत्युस्त्वच्छरीरे य एषः॥ ॥15॥

एवं मृत्युं जायमानं विदित्वा
ज्ञानेन तिष्ठन्न बिभेति मृत्योः।
विनश्यते विषये यस्य मृत्यु
र्मृत्योर्यथा विषयं प्राप्य मर्त्यः॥ ॥16॥

धृतराष्ट्र उवाच
यानेवाहुरिज्यया साधुलोकान्द्वि
जातीनां पुण्यतमान्सनातनान्।
तेषां परार्थं कथयन्तीह वेदा
एतद्विद्वान्नैति कथं नु कर्म॥ ॥17॥

उवाच
एवं ह्यविद्वान्परियाति तत्र
तथार्थजातं च वदन्ति वेदाः ।
स नेहायाति परं परात्मा
प्रयाति मार्गेण निहन्त्यमार्गान् ॥ ॥18॥

धृतराष्ट्र उवाच
कोऽसौ नियुङ्क्ते तमजं पुराणं
स चेदिदं सर्वमनुक्रमेण ।
किं वास्य कार्यमथवासुखं च
तन्मे विद्वन्ब्रूहि सर्वं यथावत् ॥ ॥19॥

सनत्सुजात उवाच
दोषो महानत्र विभेदयोगे
ह्यनादियोगेन भवन्ति नित्याः ।
तथास्य नाधिक्यमपैति किञ्चि
दनादियोगेन भवन्ति पुंसः ॥ ॥20॥

यदेतदद्धा भगवान्स नित्यं
विकारयोगेन करोति विश्वम् ।
तथा च तच्छक्तिरिति स्म मन्ये
तथार्थयोगे च भवन्ति वेदाः ॥ ॥21॥

धृतराष्ट्र उवाच
यस्माद्धर्मानाचरन्तीह केचि
त्तथाधर्मान्केचिदिहाचरन्ति ।
धर्मः पापेन प्रतिहन्यते वा
उताहो धर्मः प्रतिहन्ति पापम् ॥ ॥22॥

सनत्सुजात उवाच
तस्मिन्स्थितो वाप्युभयं हि नित्यं
ज्ञानेन विद्वान्प्रतिहन्ति सिद्धम् ।
अथान्यथा पुण्यमुपैति देही
तथागतं पापमुपैति सिद्धम् ॥ ॥23॥

गत्वोभयं कर्मणा भुज्यतेऽस्थिरं
शुभस्य पापस्य स चापि कर्मणा ।
धर्मेण पापं प्रणुदतीह विद्वा
न्धर्मो बलीयानिति तस्य विद्धि ॥ ॥24॥

येषां धर्मेषु विस्पर्धा बले बलवतामिव ।
ते ब्राह्मणा इतः प्रेत्य स्वर्गे यान्ति प्रकाशताम् ॥ ॥25॥

येषां धर्मे न च स्पर्धा तेषां तत् ज्ञानसाधनम् ।
ते ब्राह्मणा इतो मुक्ताः स्वर्गं यान्ति त्रिविष्टपम् ॥ ॥26॥

तस्य सम्यक्समाचारमाहुर्वेदविदो जनाः ।
नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनम् ॥ ॥27॥

यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोदकम् ।
अन्नपानं च ब्राह्मणस्तज्जीवेन्नानुसंज्वरेत् ॥ ॥28॥

यत्राकथयमानस्य प्रयच्छत्यशिवं भयं ।
अतिरिक्तमिवाकुर्वन्स श्रेयान्नेतरो जनः ॥ ॥29॥

यो वाकथयमानस्य ह्यात्मानं नानुसंज्वरेत् ।
ब्रह्मस्वं नोपहन्याद्वा तदन्नं सम्मतं सताम् ॥ ॥30॥

नित्यमज्ञातचर्या म इति मन्येत ब्राह्मणः ।
ज्ञातीनां तु वसन्मध्ये नैव विन्द्येत किञ्चन ॥ ॥31॥

को ह्येवमन्तरात्मानं ब्राह्मणो मन्तुमर्हति ।
निर्लिङ्गमचलं शुद्धं सर्वद्वन्द्वविवर्जितम् ॥ ॥32॥

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपध्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ ॥33॥

अश्रांतः स्यादनादाता सम्मतो निरुपद्रवः ।
शिष्टो न शिष्टवत्स स्याद्ब्राह्मणो ब्रह्मवित्कविः ॥ ॥34॥

ये यथा वान्तमश्नन्ति बाला नित्यमभूतये ।
एवं ते वान्तमश्नन्ति स्ववीर्यस्योपभोजनात् ॥ ॥35॥

अनाढ्या मानुषे वित्ते आढ्या वेदेषु ये द्विजाः ।
ते दुर्धर्षा दुष्प्रकम्प्या विद्यात्तान्ब्रह्मणस्तनुम् ॥ ॥36॥

सर्वान्स्विष्टकृतो देवान्विद्याद्य इह कश्चन ।
न समानो ब्राह्मणस्य यस्मिन्प्रयतते स्वयं ॥ ॥37॥

यमप्रयतमानं तु मानयन्ति स मानितः ।
न मान्यमानो मन्येत नावमाने विसंज्वरेत् ॥ ॥38॥

लोकस्वभाववृत्तिर्हि निमिषोन्मेषवत्सदा ।
विद्वांसो मानयन्तीह इति मन्येत मानितः ॥ ॥39॥

अधर्मविदुषो मूढा लोकशास्त्रविवर्जिताः ।
न मान्यं मानयिष्यन्ति इति मन्येदमानितः ॥ ॥40॥

न वै मानश्च मौनं च सहितौ वसतः सदा ।
अयं मानस्य विषयो ह्यसौ मौनस्य तद्विदुः ॥ ॥41॥

श्रीर्हि मानार्थसंवासात्सा चापि परिपन्थिनी।
ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय॥ ॥42॥

द्वाराणि सम्यक्प्रवदन्ति सन्तो
बहुप्रकाराणि दुराचराणि।
सत्यार्जवे ह्रीर्दमशौचविद्याः
षण्मानमोहप्रतिबन्धनानि॥ ॥43॥

## द्वितीयोऽध्यायः

धृतराष्ट्र उवाच
कस्यैष मौनः कतरन्नु मौनं
प्रब्रूहि विद्वन्निह मौनभावं।
मौनेन विद्वानुपयाति मौनं
कथं मुने मौनमिहाचरन्ति॥ ॥1॥

सनत्सुजात उवाच
यतो न वेदा मनसा सहैन
मनुप्रविश्यन्ति ततोऽथ मौनम्।
यत्रोत्थितो वेदशब्दस्तथायं
स तन्मयत्वेन विभाति राजन्॥ ॥2॥

धृतराष्ट्र उवाच
ऋचो यजूंष्यधीते यः सामवेदं च यो द्विजः।
पापानि कुर्वन्पापेन लिप्यते न स लिप्यते॥ ॥3॥

सनत्सुजात उवाच
नैनं सामान्यृचो वापि न यजूंषि विचक्षण।
त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहं॥ ॥4॥

न च्छन्दांसि वृजिनात्तारयन्ति
मायाविनं मायया वर्तमानम्।
नीडं शकुन्ता इव जातपक्षा
श्छन्दांस्येनं प्रजहन्त्यन्तकाले॥ ॥5॥

धृतराष्ट्र उवाच
न चेद्वेदा वेदविदं त्रातुं शक्ता विचक्षण।
अथ कस्मात्प्रलापोऽयं ब्राह्मणानां सनातनः॥ ॥6॥

सनत्सुजात उवाच
तस्यैव नामादिविशेषरूपै

रिदं जगद्भाति महानुभाव ।
निर्दिश्य सम्यक्प्रवदन्ति वेदा
स्तद्विश्ववैरूप्यमुदाहरन्ति ॥ ॥7॥

तदर्थमुक्तं तप एतदिज्या
ताभ्यामसौ पुण्यमुपैति विद्वान् ।
पुण्येन पापं विनिहत्य पश्चा
त्स जायते ज्ञानविदीपितात्मा ॥ ॥8॥

ज्ञानेन चात्मानमुपैति विद्वा
न्न चान्यथा वर्गफलानुकांक्षी ।
अस्मिन्कृतं तत्परिगृह्य सर्व
ममुत्र भुङ्क्ते पुनरेति मार्गम् ॥ ॥9॥

अस्मिन्लोके तपस्तप्तं फलमन्यत्र भुज्यते ।
ब्राह्मणानां तपः स्वृद्धमन्येषां तावदेव तत् ॥ ॥10॥

धृतराष्ट्र उवाच
कथं समृद्धमत्यर्थं तपो भवति केवलं ।
सनत्सुजात तद्ब्रूहि कथं विद्यामहं प्रभो ॥ ॥11॥

सनत्सुजात उवाच
निष्कल्मषं तपस्त्वेतत्केवलं परिचक्षते ।
एतत्समृद्धमत्यर्थं तपो भवति नान्यथा ॥ ॥12॥

तपोमूलमिदं सर्वं यन्मां पृच्छसि क्षत्रिय ।
तपसा वेदविद्वांसः परं त्वमृतमाप्नुयुः ॥ ॥13॥

धृतराष्ट्र उवाच
कल्मषं तपसः ब्रूहि श्रुतं निष्कल्मषं तपः ।
सनत्सुजात येनेदं विद्यां गुह्यं सनातनं ॥ ॥14॥

सनत्सुजात उवाच
क्रोधादयो द्वादश यस्य दोषा
स्तथा नृशंसानि च सप्त राजन् ।
ज्ञानादयो द्वादश चाततानाः
शास्त्रे गुणा ये विदिता द्विजानां ॥ ॥15॥

क्रोधः कामो लोभमोहौ विवित्सा
कृपासूया मानशोकौ स्पृहा च ।
ईर्ष्या जुगुप्सा च महागुणेन
सदा वर्ज्या द्वादशैते नरेण ॥ ॥16॥

एकैकमेते राजेंद्र मनुष्यं पर्युपासते ।
लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः ॥ ॥17॥

संभोगसंविद्विषमेधमानो
दत्तानुतापी कृपणोऽबलीयान् ।
वर्गप्रशंसी वनितां च द्वेष्टा
एते परे सप्त नृशंसरूपाः ॥ ॥18॥

ज्ञानं च सत्यं च दमः श्रुतं च
अमात्सर्यं ह्रीस्तितिक्षानसूया ।
यज्ञश्च दानं च धृतिः शमश्च
महाव्रता द्वादश ब्राह्मणस्य ॥ ॥19॥

यस्त्वेतेभ्यःऽप्रवसेद्द्वादशेभ्यः
सर्वामिमां पृथिवीं स प्रशिष्यात् ।
त्रिभिर्द्वाभ्यामेकतो वाविमुक्ताः
क्रमाद्विशिष्टा मौनभूता भवन्ति ॥ ॥20॥

दमोऽष्टादशदोषः स्यात्प्रतिकूलं कृते भवेत् ।
अनृतं पैशुनं तृष्णा प्रातिकूल्यं तमोऽरतिः ॥ ॥21॥

लोकद्वेषोऽभिमानश्च विवादः प्राणिपीडनम् ।
परिवादोऽतिवादश्च परितापोऽक्षमाधृतिः ॥ ॥22॥

असिद्धिः पापकृत्यं च हिंसा चेति प्रकीर्तिताः ।
एतैर्दोषैर्विमुक्तो यः स दमः सद्भिरुच्यते ॥ ॥23॥

मदोऽष्टादशदोषः स्यात्त्यागो भवति षड्विधः ।
विपर्ययाः स्मृता एते दमदोषा उदाहृताः ॥ ॥24॥

श्रेयांस्तु षड्विधस्त्यागस्तृतीयस्तत्र दुष्करः ।
तेन दुःखं तरन्त्येव तस्मिंस्त्यक्ते जितं भवेत् ॥ ॥25॥

अर्हते याचमानाय पुत्रान्वित्तं ददाति यत् ।
इष्टापूर्तं द्वितीयं स्यान्नित्यं वैराग्ययोगतः ॥ ॥26॥

कामत्यागश्च राजेंद्र स तृतीय इति स्मृतः ।
अप्रमादी भवेदेतैः स चाप्यष्टगुणो मतः ॥ ॥27॥

सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च ।
अस्तेयो ब्रह्मचर्यं च तथासंग्रह एव च ॥ ॥28॥

एवं दोषा दमस्योक्तास्तान्दोषान्परिवर्जयेत् ।
दोषत्यागेऽप्रमादः स्यात्स चाप्यष्टगुणो मतः ॥ ॥29॥

सत्यात्मा भव राजेंद्र सत्ये लोकाः प्रतिष्ठिताः।
तांस्तु सत्यमुखानाहु स्सत्ये ह्यमृतमाहितम्॥ ॥30॥

निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत्।
एतद्धात्रा कृतं वित्तं सत्यमेव सतां वरम्॥ ॥31॥

दोषैरेतैर्वियुक्तं तु गुणैरेतैः समन्वितम्।
एतत्समृद्धमत्यर्थं तपो भवति केवलम्॥ ॥32॥

यन्मां पृच्छसि राजेंद्र संक्षेपात्तद्ब्रवीमि ते।
एतत्पापहरं शुद्धं जन्ममृत्युजरापहम्॥ ॥33॥

इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत।
अतीतानागतेभ्यश्च मुक्तश्चेत्स सुखी भवेत्॥ ॥34॥

धृतराष्ट्र उवाच
आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कत्थ्यते जनः।
तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथापरे॥ ॥35॥

द्विवेदाश्चैकवेदाश्च अनृचश्च तथापरे।
एतेषु मेऽधिकं ब्रूहि यमहं वेद ब्राह्मणं॥ ॥36॥

सनत्सुजात उवाच
एकवेदस्य चाज्ञानाद्वेदास्ते बहवोऽभवन्।
सत्यस्यैकस्य राजेंद्र सत्ये कश्चिदवस्थितः॥ ॥37॥

य एनं वेद तत्सत्यं प्राज्ञो भवति नित्यदा।
दानमध्ययनं यज्ञो लोभादेव प्रवर्तते॥ ॥38॥

सत्यात्प्रच्यवमानानां संकल्पा वितथाभवन्।
ततो कर्म प्रतायेत सत्यस्यानवधारणात्॥ ॥39॥

विद्याद्बहुपठं तं तु बहुवागिति ब्राह्मणं।
य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया॥ ॥40॥

छंदांसि नाम द्विपदां वरिष्ट
स्वच्छन्दयोगेन भवन्ति तत्र।
छंदोविदस्तेन च तानधीत्य
गता हि वेदस्य न वेद्यमार्याः ॥ ॥41॥

न वेदानां वेदिता कश्चिदस्ति
वेदेन वेदं न विदुर्न वेद्यं।
यो वेद वेदं स च वेद वेद्यं
यो वेद वेद्यं न स वेद सत्यं॥ ॥42॥

यो वेद वेदान्स च वेद वेद्यं
न तं विदुर्वेदविदो न वेदाः ।
तथापि वेदेन विदन्ति वेदं
ये ब्राह्मणा वेदविदो भवन्ति ॥ ॥43॥

यामांशभागस्य तथा हि वेदा
यथा हि शाखा च महीरुहस्य ।
संवेदनेऽप्येवमथामनन्ति
तस्मिन्हि नित्ये परमात्मनोऽर्थे ॥ ॥44॥

अभिजानामि ब्राह्मणमाख्यातारं विचक्षणं ।
एवं योऽभिविजानाति स जानाति परं हि तत् ॥ ॥45॥

नास्य पर्येषणं गच्छेत्प्रत्यर्थिषु कदाचन ।
अविचिन्वन्निमं वेदे ततः पश्यति तं प्रभुम् ॥ ॥46॥

तूष्णींभूत उपासीत न चेच्छेन्मनसा अपि ।
अभ्यावर्तेत ब्रह्मास्मै बह्वनन्तरमाप्नुयात् ॥ ॥47॥

मौनाद्धि मुनिर्भवति नारण्यवसनान्मुनिः ।
अक्षरं तं तु यो वेद स मुनिश्रेष्ठ उच्यते ॥ ॥48॥

सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते ।
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ॥ ॥49॥

प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ।
सत्ये वै ब्रह्मणि तिष्टंस्तद्विद्वान्सर्वविद्भवेत् ॥ ॥50॥

ज्ञानादिषु स्थितोऽप्येवं क्षत्रिय ब्रह्म पश्यति ।
वेदानां चारपूर्वेण चैतद्विद्वन्ब्रवीमि ते ॥ ॥51॥

## तृतीयोऽध्यायः

धृतराष्ट्र उवाच
सनत्सुजात यदिमां परार्थां
ब्राह्मीं वाचं वदसि हि विश्वरूपां ।
परां हि कार्येषु सुदुर्लभां कथां
प्रब्रूहि मे वाक्यमेवं कुमार ॥ ॥1॥

सनत्सुजात उवाच
नैतद्ब्रह्म त्वरमाणेन लभ्यं
यन्मां पृच्छस्यभिषङ्गेण राजन् ।

बुद्धौ प्रलीने मनसि प्रचिन्त्या
विद्या हि सा ब्रह्मचर्येण लभ्या ॥ ॥2॥

आद्यां विद्यां वदसि हि सत्यरूपां
या प्राप्यते ब्रह्मचर्येण सद्भिः ।
यां प्राप्यैनं मर्त्यभावं त्यजन्ति
या वै विद्या गुरुवृद्धेषु नित्या ॥ ॥3॥

धृतराष्ट्र उवाच
ब्रह्मचर्येण या विद्या शक्या वेदितुमञ्जसा ।
तत्कथं ब्रह्मचर्यं स्यादेतद्विद्वन्ब्रवीहि मे ॥ ॥4॥

सनत्सुजात उवाच
आचार्ययोनिमिह ये प्रविश्य
भूत्वा गर्भं ब्रह्मचर्यं चरन्ति ।
इहैव ते शास्त्रकारा भवन्ति
विहाय देहं परमं यान्ति सत्यम् ॥ ॥5॥

अस्मिन्लोके विजयन्तीह कामा
न्ब्राह्मीं स्थितिमनुतितिक्षमाणाः ।
त आत्मानं निर्हरंतीह देहा
न्मुञ्जादिषीकामिव धीरभावात् ॥ ॥6॥

शरीरमेतौ कुरुतः पिता माता च भारत ।
आचार्यतस्तु यज्जन्म तत्सत्यं वै तथामृतम् ॥ ॥7॥

स आवृणोत्यमृतं संप्रयच्छं
स्तस्मै न द्रुह्येत्कृतमस्य जानन् ।
गुरुं शिष्यो नित्यमभिवादयीत
स्वाध्यायमिच्छेच्च सदाप्रमत्तः ॥ ॥8॥

शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः ।
ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते ॥ ॥9॥

यथा नित्यं गुरौ वृत्तिर्गुरुपत्नयां तथाचरेत् ।
तत्पुत्रे च तथा कुर्वन्द्वितीयः पाद उच्यते ॥ ॥10॥

आचार्येणात्मकृतं विजानन्
ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन ।
यन्मन्यते तं प्रति हृष्टबुद्धिः
स वै तृतीयो ब्रह्मचर्यस्य पादः ॥ ॥11॥

आचार्याय प्रियं कुर्यात्प्राणैरपि धनैरपि ।
कर्मणा मनसा वाचा चतुर्थः पाद उच्यते ॥ ॥12॥

कालेन पादं लभते तथायं
तथैव पादं गुरुयोगतश्च ।
उत्साहयोगेन च पादमृच्छे
च्छास्त्रेण पादं च ततोऽभियाति ॥ ॥13॥

ज्ञानादयो द्वादश यस्य रूप
मन्यानि चाङ्गानि तथा बलं च ।
आचार्ययोगे फलतीति चाहु
र्ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ॥ ॥14॥

एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ।
ऋषयश्च महाभागा ब्रह्मचर्येण चाभवन् ॥ ॥15॥

एतेनैव सगन्धर्वा रूपमप्सरसोऽजयन् ।
एतेन ब्रह्मचर्येण सूर्य अह्नाय जायते ॥ ॥16॥

आकाङ्क्षार्थस्य संयोगाद्रसभेदार्थिनामिव ।
एवं ह्येतत्समाज्ञाय तादृग्भावं गता इमे ॥ ॥17॥

अंतवंतः क्षत्रिय ते जयंति
लोकांजनाः कर्मणा निर्मितेन ।
ज्ञानेन विद्वांस्तेज अभ्येति नित्यं
न विद्यते ह्यन्यथा तस्य पन्थाः ॥ ॥18॥

धृतराष्ट्र उवाच
आभाति शुक्लमिव लोहितमिवाथो
कृष्णमथार्जुनं काद्रवं वा ।
तद्ब्राह्मणः पश्यति यत्र विद्वा
न्कथंरूपं तदमृतमक्षरं परम् ॥ ॥19॥

सनत्सुजात उवाच
नाभाति शुक्लमिव लोहितमिवाथो
कृष्णमर्जुनं वा काद्रवं वा ।
न पृथिव्यां तिष्ठति नांतरिक्षे
नैतत्समुद्रे सलिलं बिभर्ति ॥ ॥20॥

नैवर्क्षु तन्न यजुःषु नाप्यथर्वसु
न दृश्यते वै विमलेषु सामसु ।
रथंतरे बार्हते वापि राजन्
महाव्रतस्यात्मनि दृश्यते तत् ॥ ॥21॥

अवारणीयं तमसः परस्ता
त्तदंततोऽभ्येति विनाशकाले ।

अणीयरूपं च तथाप्यणीयसां
महत्स्वरूपं त्वपि पर्वतेभ्यः ॥ ॥22॥

तदेतदह्ना संस्थितं भाति सर्वं
तदात्मवित्पश्यति ज्ञानयोगात् ।
तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं
य एतद्विदुरमृतास्ते भवन्ति ॥ ॥23॥

## चतुर्थोऽध्यायः

सनत्सुजात उवाच
यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।
तद्वै देवा उपासते यस्मादर्को विराजते ।
योगिनस्तं प्रपश्यंति भगवंतं सनातनं ॥ ॥1॥

शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते ।
तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनं ।
योगिनस्तं प्रपश्यंति भगवंतं सनातनं ॥ ॥2॥

पूर्णात्पूर्णमुद्धरंति पूर्णात्पूर्णं प्रचक्षते ।
हरंति पूर्णात्पूर्णं च पूर्णेनैवावशिष्यते ।
योगिनस्तं प्रपश्यंति भगवंतं सनातनं ॥ ॥3॥

आपोऽथाद्भ्य स्सलिलं तस्य मध्ये
उभौ देवौ शिश्रियातेऽन्तरिक्षे ।
आदद्रीची स्सविषूचीर्वसाना
वुभौ भिभर्ति पृथिवीं दिवं च ॥
योगिनस्तं प्रपस्यंति भगवन्तं सनातनम् ॥ ॥4॥

चक्रे रथस्य तिष्ठन्तं धृवस्याव्ययकर्मणः ।
केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनं ॥ ॥5॥

न सादृश्ये तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ।
मनीषयाथोमनसा हृदा च
य एनं विदुरमृतास्ते भवन्ति ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ॥6॥

द्वादश पूगा स्सरितो देवरक्षिता मध्वीशते ।
तदनुविधायिनस्तदा संचरन्ति घोरम् ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्॥ ॥7॥

तदर्धमासं पिबति संचितं भ्रमरो मधु।
ईशानः सर्वभूतेषु हविर्भूतमकल्पयत्।
योगिनस्तं प्रपस्यन्ति भगवन्तं सनातनम्॥ ॥8॥

हिरण्यपर्णमश्वत्थमभिपत्य ह्यपक्षकाः।
तत्र ते पक्षिणो भूत्वा प्रपतन्ति यथासुखम्।
योगिनस्तं प्रपस्यन्ति भगवन्तं सनातनम्॥ ॥9॥

अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः।
आदित्यो गिरते चन्द्रमादित्यं गिरते परः।
योगिनस्तं प्रपस्यन्ति भगवन्तं सनातनम्॥ ॥10॥

एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन्।
तं चेत्सततमुत्क्षिपेन्न मृत्युर्नामृतं भवेत्।
योगिनस्तं प्रपस्यन्ति भगवन्तं सनातनम्॥ ॥11॥

अंगुष्ठमात्रः पुरुषोऽन्तरात्मा
लिङ्गस्य योगेन स याति नित्यम्।
तमीशमीळ्यमनुकल्पमाद्यं
पश्यन्ति मूढा न विराजमानम्॥
योगिनस्तं प्रपस्यन्ति भगवन्तं सनातनम्॥ ॥12॥

गूहन्ति सर्पा इव गह्वरेषु
क्षयं नीत्वा स्वेन वृत्तेन मर्त्यान्।
ते विप्रमुह्यन्ति जना विमूढा
स्तैर्दत्ता भोगा मोहयन्ते भवाय॥
योगिनस्तं प्रपस्यन्ति भगवन्तं सनातनम्॥ ॥13॥

असाधना वापि ससाधना वा
समानमेतद्दृश्यते मानुषेषु।
समानमेतदमृतस्येतरस्य
युक्तास्तत्र मध्व उत्सं समापुः॥
योगिनस्तं प्रपस्यन्ति भगवन्तं सनातनम्॥ ॥14॥

उभौ लोकौ विद्यया व्याप्य यान्ति
तदाहुतं चाहुतमग्निहोत्रम्।
मा ते ब्राह्मी लघुतामादधीत
प्रज्ञानं स्यान्नाम धीरा लभन्ते॥
योगिनस्तं प्रपस्यन्ति भगवन्तं सनातनम्॥ ॥15॥

एवंरूपो महानात्मा पावकं पुरुषो गिरन्।

यो वै तं पुरुषं वेद तस्येहात्मा न रिष्यते ।
योगिनस्तं प्रपस्यन्ति भगवन्तं सनातनम् ॥ ॥16॥

तस्मात्सदा सत्कृतः स्या
न्न मृत्युरमृतं कुतः ।
सत्यानृते सत्यसमानुबन्धिनी
सतश्च योनिरसतश्चैक एव ॥
योगिनस्तं प्रपस्यन्ति भगवन्तं सनातनम् ॥ ॥17॥

अङ्गुष्टमात्रः पुरुषोऽन्तरात्मा
न दृश्यतेऽसौ हृदये निविष्टः ।
अजश्चरो दिवारात्रमतन्द्रितश्च
स तं मत्वा कविरास्ते प्रसन्नः ॥ ॥18॥

तस्माच्च वायुरायातस्तस्मिंश्च प्रलयस्तथा ।
तस्मादग्निश्च सोमश्च तस्माच्च प्राण आगतः ॥ ॥19॥

तत्प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः ।
भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र च ॥ ॥20॥

यः सहस्रं सहस्राणां पक्षानाहृत्य संपतेत् ।
नान्तं गच्छेत्कारणस्य यद्यपि स्यान्मनोजवः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ॥21॥

अदर्शने तिष्ठति रूपमस्य
पश्यन्ति चैनं सुसमिद्धसत्त्वाः ।
हीनो मनीषी मनसाभिपश्ये
द्य एनं विदुरमृतास्ते भवन्ति ॥ ॥22॥

इमं यः सर्वभूतेषु आत्मानमनुपश्यति ।
अन्यत्रान्यत्र युक्तेषु स किं शोचेत्ततः परम् ॥ ॥23॥

यथोदपाने महति सर्वतःसंप्लुतोदके ।
एवं भूतेषु सर्वेषु ब्राह्मणस्य विशेषतः ॥ ॥24॥
अहमेवास्मि वो माता पिता पुत्रोऽस्म्यहं पुनः ।
आत्माहमस्मि सर्वस्य यच्च नास्ति यदस्ति च ॥ ॥25॥

पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत ।
ममैव यूयमात्मस्था न मे यूयं न चाप्यहम् ॥ ॥26॥

आत्मैव स्थानं मम जन्म चात्मा
ओतप्रोतोऽहमजरप्रतिष्ठः ।
अजश्चरो दिवारात्रमतन्द्रितोऽहं
मां विज्ञाय कविरास्ते प्रसन्नः ॥ ॥27॥

अणोरणीयान्सुमनाः सर्वभूतेष्ववस्थितः ।
पितरं सर्वभूतानां पुष्करे निहितं विदुः ॥ ॥28॥

॥ इति श्रीमहाभारते सनत्सुजातधृतराष्ट्रसंवादो नाम सनत्सुजातीयम् ॥